तिरुमलतिरुपतिदेवस्थानम्




# सप्तगिरिः

सचित्रमासपत्रिका

एप्रिल् - २०२०, रू.५/-

२०२० एप्रिल् ०२ तः १० पर्यन्तम्

ओण्टिमिट्ट

## श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवम्



# तिरुमलतिरुपतिदेवस्थानम्

## नागलापुरम्

### श्रीवेदवल्ली समेत श्रीवेदनारायणस्वामिनः ब्रह्मोत्सवः

२०२० मे ०५ तः मे १३ २०२० पर्यन्तम्

**०५.०५.२०२०**
भौम्यवासरः
प्रातः - ध्वजारोहणम्
रात्रौ - महाशेषवाहनम्

**०६.०५.२०२०**
सौम्यवासरः
प्रातः - लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

**०७.०५.२०२०**
बृहस्पतिवासरः
प्रातः - सिंहवाहनम्
रात्रौ - मौक्तिकमण्डपम्

**०८.०५.२०२०**
भृगुवासरः
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

**०९.०५.२०२०**
स्थिरवासरः
प्रातः - आन्दोलिकासेवा
रात्रौ - गरुडवाहनम्

**१०.०५.२०२०**
भानुवासरः
प्रातः - हनुमद्वाहनम्
सायं - वसंतोत्सवम्
रात्रौ - गजवाहनम्

**११.०५.२०२०**
इन्दुवासरः
प्रातः - सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

**१२.०५.२०२०**
भौम्यवासरः
प्रातः - रथोत्सवः
रात्रौ - अश्ववाहनम्

**१३.०५.२०२०**
सौम्यवासरः
प्रातः - चक्रस्नानम्
रात्रौ - ध्वाजावरोहणम्



## गीतामृतम्

अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः।।

न केवलम् एतावन्तः, अन्येऽपि बहवः मदर्थं प्राणान् समर्पयितुं सिद्धाः बहुविधानि प्रहारसाधनानि शस्त्राणि धृतवन्तः समरनिष्णाताः विक्रमिणः सैन्ये सन्ति।

(भगवद्गीता १/९)

## जगन्नाथाष्टकम्



रथारूढो गच्छन् पथि मिलितभूदेवपटलैः
स्तुतिप्रादूर्भावं प्रतिपदमुपाकर्ण्य सदयः।
दयासिन्धुर्बन्धुः सकलजगतां सिन्धुसूतया
जगन्नाथः स्वामी नयनपथगामी भवतु मे।।

(श्री जगद्गुरुशङ्कराचार्यकृत जगन्नाथाष्टकस्य देव व्रती टीका)

जगन्नाथस्य अनन्यसाधारणा रथयात्रा आषाढशुक्लद्वितीयायां सम्पद्यते। तस्मिन् समये जगन्नाथः मूलविराट् रथे आरोप्यते। रथयात्रायाः पश्चात् ब्रह्ममण्डपस्थभूसुराः जगन्नाथस्य स्त्रोत्रादिकं पठन्ति। तानि स्त्रोत्राणि जगन्नाथः शृणोति। स्त्रोत्रपारायणेन सन्तुष्टः जगन्नाथः करुणावारि - तरङ्गितः समस्तजनानां सकल लोकानाञ्च प्रीतिपात्रं सत् महालक्ष्म्या सह प्रकटितो भवति। तादृशः जगन्नाथः स्वामी मम साक्षात्कारविषयो भवतु इति प्रार्थयते शङ्करः।

सम्पादकीयम्

# श्री रामायण

# महाकाव्यावतरणम्

श्री रामचरितं रसभरितम्। रामायणवत् लोकव्यवहारं सुस्पष्टं बोधयितुं अन्यत् काव्यं लोके न दृश्यते। आदिकवि वाल्मीकात् एतावत्पर्यन्तं इयं रमणीया कथा विभिन्न भाषासु विभिन्न रीतिषु स्वगेहमलं करोति। इदं काव्यं न केवलं भारतावनौ अपि च भारतीयानां संस्कृतिः यत्र प्रसारिता विभिन्न देशेषु तत्रापि प्रचार प्रशस्तिमवाप।

इदं काव्यं भवति आदिकाव्यम्। ब्रह्मणः अनुग्रहेण वाल्मीकि महर्षिः इदं काव्यं संदृब्धवान्। एकदा तपस्वी वाल्मीकिः स्नानकार्याय तमसा नदीं प्रति व्रजन् नदी रोधसि करुण रसात्मकं दृश्यम् ददर्श। एकस्य वृक्षस्योपरि मदनबाणेन पीडित क्रौञ्च मिथुनात् एकः पुरुषः पक्षि किशतबाणेन हतः। तं पक्षिणं दृष्ट्वा स्त्री पक्षि विलपितवती। तेन कारणेन महर्षेः हृदयः करुणार्द्रः सञ्जातः। ततः परं रवेण हृदयशोकः श्लोक रूपेण अवततार।

मा निषाद! प्रतिष्ठां त्वमगमश्शाश्वतीस्समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।।

हे निषाद! अधिककालं मा तिष्ठ किमर्थमिति चेत् काममोहित क्रौञ्चमिथुनात् एकं अवधीः इति किरातकाय शापं दत्तवान्। न केवलं अत्र शाप विशेषः, अस्मिन् श्लोके रामायण कथा सूचकार्थः अन्यः अपि विद्यते। तदानीं ब्रह्म प्रत्यक्षो भूत्वा तव मुखात् था वाणी निस्सृतासा मम संकल्पेन घटिता। इतः परं रामायणं रचय एतद् भूलोके शाश्वतं तिष्टति इति ब्रवीति। अयं वाल्मीकिः यावत्पर्यन्तं ‘मानिषाद’ श्लोकं न प्रयुक्तवान् तावत् पर्यन्तं लौकिक वाङ्मये छन्दोबद्धवाणी न प्रपञ्चिता। रामायण काव्य अवतरणाय क्रौञ्च मिथुनकथा एव हेतु भूता। तदर्थं शोकात् श्लोकत्वं आगतः इति विगदन्ति। अनेन रामायणेन वाल्मीकिः प्रथित यशस्कः सञ्जातः। “इदं काव्यं हृदयानन्देन महिमा सिद्धि प्रदायिनी अपि भवति”। रामायणे श्री सीताराम दम्पती प्रत्यणै प्रत्यक्षरेऽपि प्रकाशमानौ भवतः। रामायण पठनेन मातापित्रोर्भक्तिः, भ्रातृप्रीतिः, ज्येष्ठानुवर्तनम्, लोकमर्यादानुसरणम्, प्रतिज्ञापालनम् अश्रितवात्सल्यम्, स्वामिकार्य निर्वहणम्, स्वार्थपरत्वनिवृत्तिः, चित्तशुद्धिः, परोपकारबुद्धिः इत्यादि अनेकाः सद्गुणाः आगच्छन्ति।

तदर्थं रामायण काव्यं पारायणं कुर्मः, पावनमनस्काः सन्तः राममार्गे गमनशीलाः भवेम। श्री सीताराम सम्पूर्ण अनुग्रहं प्रप्नुमः।

तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०७ सञ्चिका-०१



# एप्रिल्-२०२०

श्रीशार्वरि नाम संवत्सरस्य चैत्र शुक्ल अष्टमि तः वैशाख शुक्ल सप्तमि पर्यन्तम् - १९४१

वेङ्कटाद्रिसमं स्थानं
ब्रह्माण्डे नास्ति किञ्चन ।
वेङ्कटेशसमो देवो
न भूतो न भविष्यति ॥



# सप्तगिरिः



मुखचित्रम् – श्री सीतालक्ष्मण समेत श्री कोदण्डरामस्वामिनः ओण्टिमिट्ट

अन्तिमरक्षापुटः – श्रीसीतारामपट्टाभिषेकम्

गौरवसम्पादकः-
श्री अनिल्कुमार् सिंघाल्, I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः – प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः – डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः – श्री आर्. वि. विजयकुमारः B.A. B.Ed.,
उपकार्यनिर्वहणाधिकारिणी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.



## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरि, ति.ति.देवस्थानम्,
तिरुपति - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
संपर्क कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org

एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

# श्रीरामनवमी

- डा. एन्.उमादेवी

चरवाणी - ९९५१७३४४९४

प्रतिसंवत्सरं चैत्रमास शुक्लपक्ष नवम्यां तिथौ श्रीरामनवमी प्रचलति। तस्मिन् दिने सपरिवारः श्रीरामचन्द्रः जनैः आराध्यते।

**श्रीरामचन्द्रः - धर्मसंस्थापनार्थाय संभवामि युगे युगे इति गीतावचनमनुसृत्य साधूनां रक्षणाय दुष्टानां विनाशाय महाविष्णुः श्रीराम रूपेण दशरथ पुत्रत्वेन अजायत।** श्रीरामचन्द्रस्य चरितं सर्वलोकवन्दितम्। श्रीरामस्य व्यक्तित्वं परिपूर्णम्। पुत्रत्वेन भातृत्वेन भर्तृत्वेन मित्रत्वेन नृपत्वेन शूरत्वेन आदर्शमूर्तिः श्रीरामः इति लोकविदितः। सीतारामयोः दाम्पत्यं सर्वैः आदर्शपूर्णम्। रामस्य राज्य परिपालनं सर्वैः परिपालकैः अनुसरणीयम्। महाविष्णोः अनेकेषु अवतारेषु श्रीरामस्य अवतारः अतिविशिष्टः। मानवत्वस्य अन्यन्त सन्निहितः अवतारः रामावतारः, संस्कृत भाषाध्ययने प्रप्रथमः अकारान्त पुल्लिङ्गशब्दः रामशब्दः। ''सर्वं राममयं जगत्'' आदर्श धार्मिकदम्पत्योः श्रीसीतारामयोरेव उदाहरणं सर्वत्र दृश्यते।

**भद्राचलम् -**

रामाय रामभद्राय
रामचन्द्राय वेधसे।
रघुनाथाय नाथाय
सीतायाः पतये नमः।।

भद्राचलक्षेत्रं तेलङ्गाणराज्यस्य खम्मंजनपदे वर्तते। पवित्रतमायाः गोदावरीनद्याः तटे भद्रगिरिः विद्यते। एतस्याचलस्योपरि श्रीरामचन्द्रः सीतालक्ष्मणाभ्यां विराजते। श्रीरामचन्द्रः वनवास सन्दर्भे गोदावरीतटेषु न्यवसदिति प्रसिद्धः विषयः। अस्य स्थानस्य अनतिदूरे एव श्रीरामचन्द्रस्य पर्णशाला आसीत्। ततः लोककण्टकः रावणः भिक्षुरूपेणागत्य सीतामपजहार। अत्रैव सीतामायामृगं वीक्ष्य मोहिता अभवत्। रामलक्ष्मणयोः निवासस्य अनेकानि चिह्नानि अत्र वर्तन्ते। अस्मिन् क्षेत्रे श्रीरामः चतुर्भिः बाहुभिः भद्राय दर्शनमदात्। भद्राचलस्य श्रीरामः शङ्खचक्राभ्यां दर्शनं ददाति। प्रतिसंवत्सरं चैत्रशुद्धनवम्यां सीतारामकल्याणं देवालयाधिकारिणः निर्वहन्ति। श्रीरामनवमि पर्व दिने सहस्रशः भक्ताः कल्याणोत्सवे भागं स्वीकुर्वंति। सर्वकारपक्षतः मौक्तिकसमर्पणं क्रियते।

**ओण्टिमिट्ट -**

ओण्टिमिट्टरामालये चैत्रशुद्धनवमीतः दशदिनानि ब्रह्मोत्सवं निर्वहन्ति। तस्मिन् समये





कल्याणोत्सवः चतुर्दश्यां तिथौ अत्यन्तं वैभवेन प्रचलति। ओण्टिमिट्टक्षेत्रं कडपनगरात् राजंपेटगमनमार्गे वर्तते। गर्भालये एकशिलायां सुप्रतिष्ठिताः सीताराम लक्ष्मणाः भक्तजनान् समन्दस्मितम् अनुगृह्णन्ति। आन्ध्रतेलङ्गाण राज्ययोः विभजनानन्तरम् आन्ध्र प्रदेशसर्वकारः अस्य क्षेत्रस्य वैभववर्धनार्थं निर्णीय आलयनिर्वहणभारं ति.ति.देवस्थानाय अददत्। श्रीरामनवमी उत्सवः महता वैभवेन अत्र प्रवर्तते। उत्सवानन्तरं पुष्पयागं निर्वहन्ति। ओण्टिमिट्ट क्षेत्रे श्रीरामकल्याणोत्सवं न भूतो न भविष्यति इति रीत्या आयोज्य बहुप्रशस्तिः प्राप्यते। पूर्णिमायां सीतारामयोः कल्याणाचरणम् आन्ध्रप्रदेशस्य ओण्टिमिट्टक्षेत्रस्य वैशिष्टयम्। अस्मिन् क्षेत्रे श्रीरामनवमीतः नवदिनानि ति.ति.देवस्थानस्य निर्वहणे आन्ध्रसर्वकारस्य अधिकारिकमर्यादाभिः वैभवेन क्रियन्ते।

### तिरुपति कोदण्डरामालयः -



श्रीकोदण्डरामालये पाञ्चरात्रविधानेन प्रतिसंवत्सरं ब्रह्मोत्सवः प्रचलति। अस्मिन् सन्दर्भे व्यासा भिषेकम्, अङ्कुरार्पणं, ध्वजारोहणं, शेषवाहनं हंस, सिंह, हनुमद्वाहनम् आन्दोलिकासेवाः गरुडसेवां च निर्वहन्ति। गजवाहन सेवा, अश्ववाहन सेवा च प्रचलति। चक्रस्नानं, ध्वजावरोहणं विविध प्रक्रियाभिः कल्याणोत्सवं निर्वहन्ति। तिरुपतौ प्रसिद्धेषु प्राचीनालयेषु श्रीकोदण्डरामालयः अन्यतमः। श्रीरामस्य हस्ते स्थितः कोदण्डः शक्तिसंपन्नः। सः ''कोदण्डराम'' रूपेण सर्वत्र प्रख्यातः।

### श्रीरामाविर्भावः

**ततो यज्ञे समाप्ते तु ऋतूनां षट् समत्ययुः।**
**ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ**
**नक्षत्रेदितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु**
**ग्रहेषु कर्कटे लग्ने वाक्पाविन्दुना सह।**
**प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम्**
**कौसल्याजनयद्रामं दिव्यलक्षणसंयुतम्** (रा. बाल २६.६..८०)

चैत्रमासे पुत्रकामेष्टियागे परिसमाप्ते ततः द्वादशे चैत्रमासे शुक्लपक्षे नवम्यां तिथौ अदितिदैवत्यै पुनर्वसूनक्षत्रे कर्काटलग्नारम्भे सर्वलोकनमस्कृतं दिव्यलक्षणसंयुतं श्रीरामं कौसल्या अजनयत्। रामावतार सन्दर्भे पञ्चग्रहाः स्वेषाम् उच्चस्थानेषु आसन्।

ब्रह्मणः प्रथमकल्पभूते श्वेतकल्पे सप्तमे वैवस्वतमन्वन्तरे चतुर्विंशतिमहायुगे त्रेतायुगान्ते विलम्बि नामसंवत्सरस्य उत्तरायणे, वसन्तर्तौ, चैत्रमासे, शुक्लपक्षे, नवम्यां तिथौ, पुनर्वसूनक्षत्रयुक्ते अभिजित्सहितकर्काटके लग्ने, प्रधान पच्चग्रहाणाम् उच्यस्थितौ, अयोध्यानगरे श्रीरामावतरण मभवत्।

### तिरुमलक्षेत्रे श्रीरामनवमी -



तिरुमल क्षेत्रस्य श्रीवेङ्कटेश्वरस्वामिनः सन्निधौ प्रतिसंवत्सरं चैत्रशुद्धदशम्यां श्रीराम पट्टाभिषेकोत्सवं समाचरन्ति। श्रीस्वामिनः सुप्रभातसेवायां ''कौसल्या सुप्रजा राम'' इति वदन्। सीतारामौ एव अस्मिन् युगे पद्मावती वेङ्कटेशौ अभवताम् अस्मात् कारणादेव श्रीवेङ्कटेशस्यापि मौक्तिकेषु प्रेमः भवति। श्रीस्वामिनः ब्रह्मोत्सवे मौक्तिक मण्डप सेवा अपि भवति। सीता रामौ विवाहे (कल्याणे) मौक्तिकानां शिरसिक्षेपणं कृतवन्तौ। श्रीस्वामिनः गर्भालयस्य अग्रे स्थित मण्डपे स्नपन मण्डपस्याग्रे दक्षिणदिशि उत्तराभिमुखं श्रीरामः सीता, लक्ष्मणः हनुमत् सुग्रीवः अङ्गदानां विग्रहाः सन्ति। अतः तं प्रदेशं श्रीरामस्य आचर्यते वदामः। ''नवमी आस्थानं'' तत्र श्रीस्वामिनः सुप्रभातस्तोत्रे ''अवनीतनया कमनीयकरं अभिराम गुणाकर दाशरथे।



# परशुरामचरितम्

- पद्मासना माधवन्
चरवाणी - ९०८०९३३५५२

"निःक्षत्रियां यश्च चकार मेदिनीमनेकशो बाहुवनं तथाच्छिनत्।
यः कार्तवीर्यस्य स भार्गवोत्तमो ममाऽस्तु माङ्गल्यविवृद्धये हरिः।। "

भगवान् परशुरामः राज्ञः प्रसेनजितस्य पुत्र्याः रेणुकायाः भृगुवंशीयस्य राज्ञः जमदग्नेश्च पुत्रः। स च विष्णोः अवतारः शिवस्य परमभक्तश्च। अयं शिवात् परशुनामकं विशेषशस्त्रं प्राप्तवान्। शंकरेण प्रदत्तममोघमस्त्रं परशुं सदा धृतवान् अत एव अस्य नाम परशुराम इत्यभवत्। भगवतः विष्णोः दशसु अवतारेषु षष्ठावतारः परशुरामावतारः। अयमवतारः वामनावतारानन्तरं रामावतारात् प्राक् च गण्यते। जमदग्नेः पुत्रत्वात् अयं जामदग्न्यः इत्यपि कथ्यते। अस्य जन्म अक्षयतृतीयायां (वैशाखशुक्ल तृतीयायां) अभवत्। अतः अस्मिन् दिने व्रतं उत्सवश्च आयोज्यते। अवतारेऽस्मिन् क्षत्रियाणाम् अहंकारपूर्णं राज्यं दमनपरम्परायाश्च विनाशं कृत्वा विश्वं मोचितवान् भगवान् परशुरामः। रामं वासुदेवांशमावेशावतारमाहुः। अयं रामः हैहयानां कार्तवीर्याऽऽदीनां कुलस्य नाशं कृत्वा इमां महीं एकविंशतिवारं निःक्षत्रियां च चक्रे। महर्षेः विश्वामित्रात् परशुरामः प्रारम्भिकशिक्षां प्राप्तवान्। तत्पश्चात् सः ऋचीकमहर्षेः सकाशं गतवान्। तत्र सः दिव्यं वैष्णवधनुः प्राप्तवान्। तदनन्तरं ब्रह्मर्षेः कश्यपात् विधिपूर्वकम् अविनाशिनामकवैष्णवमन्त्रोपदेशं प्राप्नोत्। एतदनन्तरं सः कैलासगिरेः श्रृंगे स्थितस्य भगवतः शंकरस्य आश्रमे विद्याम् अधिकृत्य विशिष्टं दिव्यास्त्रं परशुं प्राप्तवान्।

एकदा हैहयानां जनपदानाम् अधिपतिः पुरुषर्षभः कार्तवीर्यार्जुनः परिचर्याभिः नारायणांशावतारभूतं दत्तात्रेयम् आराध्य सहस्रं बाहून्, शत्रुषु दुःसहत्वम् अव्याहतमिन्द्रियादिकं योगेश्वरत्वम् ऐश्वर्यं च लब्धवान्। एवं लब्धसहस्रबाह्वादिरर्जुनः पवनवत् लोकेषु अव्याहतंगतिः विचचार। स कदाचित् विपिने सुचिरं मृगयां कुर्वन् यदृच्छया जमदग्नेराश्रमस्थानमुपागमत्। तपोधनः सः मुनिः कार्तवीर्यार्जुनाय कामधेन्वाः साहाय्येन आतिथ्यमाहरत्। तदा सः आत्मनः ऐश्वर्यादपि अतिशयितं सामर्थ्यं दृष्ट्वा, तदातिथ्यं नादृतवान् किंतु सः होमधेनौ साभिलाषः भटान् ऋषेः धेनुं हर्तुं प्रेरितवान्। ते नराः क्रन्दन्तीं सवत्सां धेनुं बलात् माहिष्मतीं निन्युः।

अथ अर्जुने निर्गते सति पूर्वं कचिद्गतो रामः पितुराश्रमम् आगतः तस्य दौरात्म्यं श्रुत्वा ताडितः सर्प इव क्रुद्धो बभूव। ततो भीषणंपरशुं कार्मुकं कवचं च आदाय अर्जुनं पृष्ठतोऽनुसृत्याधावत्। ततोऽर्जुनः अतिभीषणः सप्तदशाक्षौहिणीः सेनाः प्रेरितवान्। ताश्च अक्षौहिणीः भगवान् रामो एकोऽसहाय एव जघान। अथ अर्जुनः आगत्य पञ्चशतेषु धनुष्षु बाहुभिः बाणान्युगपद् सन्दधे। रामः एकस्मिन् धनुषि बद्धैः इषुभिः तान् पञ्चशतं शरान् अच्छिनत्। पुनः रामः स्वहस्ताभ्यां गिरीन् वृक्षान् च उत्क्षिप्य युधि वेगादभिधावतः अर्जुनस्य भुजान् कुठारेण चिच्छेद। एवं पितरि अर्जुने हते सति तस्य पुत्राः भयात् होमधेनुं सवत्सां रामाय समर्पितवन्तः। ततः रामः स्वेन कृतं कर्म पित्रे निवेदितवान्। तत् श्रुत्वा जमदग्निरकथयत् - हे राम! भवान् पापं कृतवान् किल? यत् नरदेवम् अर्जुनं वृथा हतवानसीति। एवं पित्रा

आदिष्टः रामः तथेत्यङ्गीकृत्य संवत्सरं तीर्थयात्रां कृत्वा पुनः आश्रममुपागमत्।

एवं स्थिते कदाचित् जलाहरणार्थं नदीं गता रेणुका तत्र, क्रीडन्तं चित्ररथाख्यं गन्धर्वराजं विलोकयन्ती पत्युः अग्निहोत्रसमयं विस्मृतवती। ततः कथाञ्चित् तं कालातिक्रमं स्मृत्वा त्वरया आगत्य पत्युः अग्रे कृताञ्जलिः तस्थौ। ततो मुनिः पत्न्याः व्यभिचारं ज्ञात्वा पुत्रान् अब्रवीत् हे पुत्राः! पापामेनां मारय इति। एवमुक्तास्ते पुत्राः मातृवधं न कृतवन्तः। ततः पित्रा आज्ञातिलङ्घिनां भ्रातृणां मातुश्च वधे सञ्चोदितः रामः तान् अवधीत्। पितुः तपोमाहात्म्याभिज्ञस्य रामस्य क्षत्रहत्यादि दोषमार्जनार्थतीर्थसेवया मातृभ्रातृ वधरूप स्वज्ञाकारित्वेन च प्रसन्नेन पित्रा वराय चोदितः रामः हतानां पुनर्जीवनं, स्वकृतस्य तेषां वधस्य तैः विस्मृतिं च वव्रे। ततस्ते भ्रातरः समातृकाः कुशलिनः जीवन्तः उत्तस्थुः।

रामवीर्येण पलायिताः अर्जुनस्य सुताः स्वपितुर्वधं स्मरन्तः, कदाचित् सभ्रातरिरामे स्वाश्रमात् वनं गते सति लब्धावसराः आश्रममुपागमन्। तत्र आश्रमे अग्निहोत्रशालायां जमदग्निं दृष्ट्वा तं मुनिं हतवन्तः। तदा रेणुका दुःखशोकार्ता आत्मानं ताडयन्ती सती रामरामेत्येवमुच्चैः चुक्रोश। हा! राम! इत्यार्तस्वरं श्रुत्वा दूरस्थाः सुताः त्वरया आश्रममासाद्य हतं पितरं ददृशुः।

ततः रामः परशुं प्रगृह्य क्षत्रकुलनाशनाय सङ्कल्पञ्चकार। ततः स रामः माहिष्मतीं गत्वा हैहयानां शिरोभिः महागिरिं चकार। तेषां रक्तेन घोरां नदीं च चक्रे। क्षत्रे अन्यायवर्तिनि सति पितृवधं हेतुं कृत्वा प्रभू रामः एकविंशतिवारं पृथ्वीं निःक्षत्रियां कृतवान्। ततः पितुः शिरः आदाय पितुः कायेन सह संयोज्य परमात्मानं क्रतुभिः अयजत्। स जमदग्निः स्वदेहं लब्ध्वा रामेण पूजितः सप्तर्षीणां मण्डले सप्तमः ऋषिरभूत्।



''क्षत्रियरुधिरमये जगदपगतपापं स्नपयसि पयसि शमितभवितापं केशव! धृत भृगुपतिरूप! जय जगदीश हरे।।

क्रोधाग्निं जमदग्निपीडनभवं संतर्पयिष्यन् क्रमात्
अक्षत्रामिह संततक्ष य इमां त्रिःसप्तकृत्वः क्षितिम्।
दत्वा कर्मणि दक्षिणां क्वचनतामास्कन्ध्य सिंधुं वसन्
अब्रह्मण्यमपाकरोतु भगवान् आब्रह्मकीटं मुनिः।।



# तव सुखदुःखयोः त्वमेव कारणम्

तेलुगु मूलम् - डा॥ वैष्णवांघ्रि सेवकदासः
अनुवादकत्री - डा. एम्. प्रफुल्ला
चरवाणी - ९४४०२८५९८५

लोके केचित् सुखिनः, केचित् दुःखिनः वर्तन्ते। केचित् विजयपथगामिनः केचित् निरन्तरपराजिताः सन्ति। केचित् नवति नर्षे अपि पर्वतान् अधिरोहन्ति। केचित् चत्वारिंशद्वर्षेप्राये एव शय्या-प्रस्थाः भवन्ति। किमर्थं एवं संभवति। एताद्दशां स्थितिं समीक्ष्य केचित् जनाः निन्दन्ति दैवम्। अथवा विश्वासराहित्यात् काले काले भगवतः अनेकान् रूपान् पूजयन्ति। अपिच नैकानि नवानि व्रतानि कुर्वन्ति। केचित् भक्तिं परित्यज्य नास्तिकाः भवन्ति।

वस्तुतः जनस्य सुखदुःखयोः कारणभूतः कः। प्रायशः तरुणान् विद्या, उद्योगाः, विनोदाः, भाविजीवितं इत्यादीनां प्रति चिन्ता पीडयति। एते केषांचित् अनायासेन पुष्कलेन प्राप्तमिव दृश्यते। केषांचित् ते अप्राप्ताः एव। विद्या, उद्योगरहिताः युवानः असामाजिककार्यासक्ताः भवन्ति। अनेन तेषां जीवनं सापायं भवति। अस्याः समस्यायाः परिष्कारः भगवद्गीतायां किमुक्तमिति पश्यामः।

**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्।
कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु॥**

(१३-२१)

सहस्रशः, कोटिशः वर्षात्पूर्वमेव भगवद्गीतायामुक्तं यत् स्वयमेव स्वस्य सुखदुःखयोः कारणं भवति न तु अन्यः। यदा जनः एतत् सत्यं अवगच्छति, तदा जीवितं परिवर्तते। तादृशं परिवर्तनं प्रापयितुं भगवद्गीता अस्ति। ''सांप्रतं संप्राप्तानां दुःखानां कारणं पूर्वजन्मकर्मफलमिति श्रुतम्। इतः पर्यन्तं ज्ञानतः असाधु वा पापं वा न कृतम्। कुतः ईदृशं कष्टम्। कुतः दुखानि कुतः सज्जनानामेव दुःखानि जायन्ते। पापिनः सुखेन जीवन्ति।'' इति बहवः प्रलपन्ति। गीताज्ञानराहित्यादेव जनाः एवं वदन्ति, न तु अन्यकारणात्। ''सदा सुखिनः भवितुं, दुःखात् मुक्ताः भवितुं च शक्यः किं'' इति कश्चित् पृष्टः चेत् तत् साधयितुमेव मानवजन्म प्राप्तमिति, तदर्थसाधनमार्गदर्शनं भगवद्गीता करोति इति, उत्तरं वक्तव्यमस्ति। स्वयंकृतकलुषहृदयं दुःखाय, दैवीगुणसंपन्नं हृदयं सुखाय च भवति। हृदयं निर्मलं, तथैव लक्ष्यं च महोन्नतं भवेत्। तदा जीवनं सुखसागरः भवति। सकलुषहृदयं, लक्ष्यरहितजीवितं दुःखसागरसदृशम्। हृदयनिर्मलीकरणं, महोन्नतलक्ष्यनिर्णयं अस्मद्वशे वर्तन्ते। अनेन सुखप्राप्तये मार्गः सिद्धः एव। अथ हृदयनैर्मल्यं नाम किम्। एषः प्रधानः प्रश्नः। असूयाद्वेषक्रोधराहित्यमेव हृदयनैर्मल्यम्।

पञ्चवर्षीयः ध्रुवः तिरस्कारं प्राप्य, महोन्नतलक्ष्यं विनिश्चितवान्। पितुः अङ्कं आरोढुं अवरोधः जातः। अतः पितुः पितामहात्, प्रपितामहात् च उन्नतं स्थानं प्राप्तुं सुदृढं निश्चयं कृतवान्। लक्ष्यः निश्चितः। अनेन तस्य कार्यः न सफलः भवति। माता सुनीतिः तं उपदिशति यत् ''ध्रुव, तव विकर्तृणां अपकारं मा चिन्तय'' इति। अर्थात् हृदये नैर्मल्यं स्थापय, न तु द्वेषं, क्रोधमिति। सः महोन्नतेन लक्ष्येण वनं गत्वा, तपः कृत्वा, भगवद्दर्शनं प्राप्य, स्वस्य मनोरथं सफलीकृतवान्। नक्षत्रस्थानं प्राप्तवान्। 
एतदेव जीवितरहस्यम्।

# तिरुमलतिरुपतिदेवस्थानम्
# कार्वेटिनगरम्
# श्रीवेणुगोपालस्वामिनः ब्रह्मोत्सवः
## २०२० मे १५ तः२३ पर्यन्तम्



**१५.०५.२०२०**
भृगुवासरः
प्रातः - ध्वजारोहणम्
रात्रौ - महाशेषवाहनम्

**१६.०५.२०२०**
स्थिरवासरः
प्रातः - लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

**१७.०५.२०२०**
भानुवासरः
प्रातः - सिंहवाहनम्
रात्रौ - मौक्तिकमण्डपम्

**१८.०५.२०२०**
इन्दुवासरः
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

**१९.०५.२०२०**
भौम्यवासरः
प्रातः - आन्दोलिकासेवा
रात्रौ - गरुडवाहनम्

**२०.०५.२०२०**
सौम्यवासरः
प्रातः - हनुमद्वाहनम्
सायं - वसन्तोत्सवः
रात्रौ - गजवाहनम्

**२१.०५.२०२०**
बृहस्पतिवासरः
प्रातः - सूर्यप्रभावाहनम्
रात्रौ - चन्द्रप्रभावाहनम्

**२२.०५.२०२०**
भृगुवासरः
प्रातः - रथोत्सवः
रात्रौ - अश्ववाहनम्

**२३.०५.२०२०**
स्थिरवासरः
प्रातः - चक्रस्नानम्
रात्रौ - ध्वाजावरोहणम्

**२४.०५.२०२०**
भानुवासरः
प्रातः - पुष्पयाग महोत्सवः

# तिरुमलतिरुपतिदेवस्थानम्

## १४-०२-२०२० तः २३-०२-२०२० पर्यन्तम् समाचरित तिरुपति श्री कपिलेश्वरस्वामिनः ब्रह्मोत्सव दृश्यमालिका तथा कलावृन्दाश्च













# तिरुमलतिरुपतिदेवस्थानम्

## १४-०२-२०२० तः २२-०२-२०२० पर्यन्तम् समाचरित श्रीनिवासमंगापुरम् श्रीकल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सव दृश्यमालिका तथा कलावृन्दाश्च













तिरुमलतिरुपतिदेवस्थानम्

## ०५-०३-२०२० तः ०९-०३-२०२० पर्यन्तम् समाचरित तिरुमल श्रीवेङ्कटेश्वरस्वामिनः प्लवोत्सव दृश्यमालिका





# श्री भगवद्रामानुजाचार्य वैभवम्

- डा.सम्पत्कुमारः



इह लोके जनिमन्तः सर्वदा सुखप्राप्तये यतन्ते। तच्च सुखं झडिति प्राप्तव्यं इति कश्चन वेगः दृश्यते। तथा सर्वैरपि तत् प्राप्यते वा इति चिन्तनीयोऽयं विषयः। यन्मनोभिलिषतं तन्नैव प्राप्यते, यन्नः तत्प्राप्यते आयासेन विनां। सुखस्य कारणं अर्थः एव इति मनुतेजनः। सुखमन्यत् शान्तिः अन्या इति विवेकः जन्मान्तरशतेनापि नोत्पद्यते। सर्वे फलैकचिन्तनापराः।

''शतं जीवितमत्यल्पं निद्रालस्यैः तदर्धकम्।
बाल्यरोगजरादुःखैः अल्पं तदपि निष्फलम्''।।

इति पुराणवाणी। सुखं नाम किं? दुःखं नाम च किं? महता यत्नेन आर्जितसुखं अपि निरन्तररूपेण कुतः न तिष्ठति? कारणं किं इति मीमांसायां नित्यसुखप्राप्तये तत्त्वचिन्तनमावश्यकम्। चिन्तना तु सर्वैः क्रियते, चिन्तनापरा एव सर्वे। उक्तं च गीतायां

''चिन्तामपरिमेयाञ्च प्रलयान्तामुपाश्रिताः। कामोपभोगपरमाः एतावदिति निश्चिताः'' इति। अत एव जननी जन्मभूमिश्च स्वर्गादपि गरीयसी। इति सत्यवाक्यमनाघ्य धनार्जनाय धावन्ति यूनः।

**आचार्यः आवश्यकताः -** ऐश्वर्यादिभिः यादृशं सुखं उपलभ्यते तन्निरन्तरं न भवति। दुःखप्रायः, दुःखोदर्कश्च धनं; न्यायर्जितधनेन भगवतः पुरुषोत्तमस्य आराधनेन च सदाचार्यकटाक्षप्राप्तिः भवति। न चेत् ''चक्रवत् परिवर्तन्ते सुखानि च दुःखानि च ''नित्य निरतिशय सुखप्राप्तिः शान्तिश्च तत्त्वज्ञानेन सिध्यति। तच्च ज्ञानं ''तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया। उपदेक्ष्यन्ति तेज्ञानं'' इत्याह प्रथमाचार्यः। गुरुरन्यः, आचार्यशब्द वाच्यास्तु अन्ये। अन्धकारनिवर्तकत्वं गुरुशब्दार्थः। शिष्याणां सर्तमुखाज्ञाननिवृत्तिद्वारा नित्यनिरतिशयसुखाप्तये परमया कृपया ये उपदिशन्ति ते आचार्याः।

आचिनोति हि शास्त्राणि, आचारे स्थापयत्यपि।
स्वयमाचरते यस्मात् तस्मदाचार्य उच्यते।।

स्वलित्ये शासितारः स्वपरहितपराः आचार्याः भवन्तीति कवितार्किकसिंहः। ईप्सिततमेषु सदाचार्येषु मूर्धन्यः आचार्य श्री भगवद्रामानुजः।

**श्रीरामानुजावतारः -** श्री भगवद्रामानुजाचार्यः अवतार पुरुषः इति स्तूयते। किंनाम अवतरणं कस्मात् कुतः इत्यनेके प्रश्नाः अस्मान् बाधन्ते। उपरितनप्रदेशात् अद्यस्तनस्थलप्राप्तिः अवतरणं इति न भावः। श्री भगवतः आज्ञया भूमौ श्रीवैकुण्ठात् अवतरणं इत्येवभावः। अस्मादृशां तु अवतरणं इति नोच्यते, अपि तु जननं इत्येव। कर्मफलानुभवाय जननं, ''कर्माविद्यादिचक्रे अनादिचक्रप्रवाहे'' इतस्ततः परिभ्रमणं फलम्। महात्मनां अवतरणे कश्चनमहान् उद्देशः विद्यते। स च उद्देशः विश्वत्राण एव। भगवानपि अवतरति तत्र च साधुपरित्राणं दुष्टनिग्रहः फलत्वेन अभिधीयेते। आचार्य अवतरणे ''निग्रह एव न दृश्यते। ते साक्षान्नारायण एव इति।

साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम्।
मग्नानुद्धरते लोकान् कारुण्यात् शास्त्रपाणिना।।

चेतनस्य उद्धारः प्रमुखः उद्देशः। श्री रामानुजः अपि अवतार पुरुषः इति तत्वोपदेश अनुष्ठान - ग्रन्थनिर्माणादिभिः निश्चिनुमः

**अवतरणवैशिष्ट्यं -** श्री भगवद्रामानुजः कस्य अवतारः इत्यत्र बहुधा विप्रतिपत्तिः। आदिशेषस्यावतारः इति निर्णयस्तु अन्तिमः। पञ्चायुधविशिष्टः श्रीमन्नारायणः आचार्य रामानुजस्तु पञ्चायुधानामपि अवतारः। एवमेव श्रीमन्निगमान्तमहादेशिकाः-

''प्रथयन् विमतेषुतीक्ष्णभावं प्रभुरस्मत्परिरक्षणे यतीन्द्रः। अपृथक्प्रतिपन्नयन्मयत्वैः ववृधे पञ्चभिरायुधैर्मुरारेः'' इति। विष्वक्सेनः भगवतः सैन्याधिपतिः, तस्यावतारः श्रीरामानुजः। ''विश्वं त्रातुं विषयनियतं व्यञ्जितानुग्रहस्सन्। विष्वक्सेनः यतिपतिरभूत् नेत्रधारः त्रिदण्डः इति। श्रीमन्नारायण एव व्यासरूपेण अवतार '' व्यासाय विष्णुरूपाय, व्यासरूपाय विष्णवे''। व्यासपादा एव ब्रह्मसूत्रकर्ता। ते एव वकुळाभरणरूपेण अवतीर्य द्राविडगाथारूपेण ब्रह्मसूत्राणि विवव्रे। स्वविवक्षितार्थः कः इति ज्ञापनद्वारा लोकोज्जीवनाय श्रीरामानुजरूपेण अवतार इति प्राज्ञः।

भगवधास्यमहारसज्ञः श्रीमानादिशेषः। ''ययोचितं शेष इतीर्यतेजनैः'' कैङ्कर्यरसज्ञः। स्वधर्मज्ञानवैराग्यसाध्यं च भक्तियोगः, तद्गोचरः परमात्मा। परं ब्रह्मनैव परमंतत्त्वं, तत्प्रतिपादकं शिष्टजनोपदिष्टं प्रेष्ठं गरिष्ठं च शुद्धान्तसिद्धान्तत्त्वं स्थापयतः श्रीरामानुजस्य अनन्तावतारस्त्वं अत्यन्तं युक्तम्। उक्तं च;

**अनन्तः प्रथमं रूपं, लक्ष्मणश्च ततः परम्।**
**बलभद्रः तृतीयस्तु, कलौ कश्चित् भविष्यति।।** इति।।

**अवतारकालः -** भूतपुर्यां सर्वक्रतुनिपुणाः नाम्ना केशवसोमयाजी इति प्रथितयशाः विप्रवर्यः आसीत्। पुत्रालाभात् खिन्नाः एते सहधर्मचारिण्या कान्तिमत्या भगवति शरणमगच्छन्। प्रसन्नः भगवान् स्वकैङ्कर्ये निरतं आदिशेषं भूमौ अवतरणार्थमादिदेश।'' तदनु :

चैत्रमासि शुक्लपक्षे पञ्चम्यां गुरुवासरे मध्याह्ने कर्कटके लग्ने नक्षत्रे रौद्रदैवते कौसल्यायां यथा श्रीरामः, यथादित्यां वामनः तथा फणिराजः निगमान्तार्थ संरक्षणार्थं अवततार भगवदाज्ञया। १०१७ A.D. भूतपुर्यां श्रीमत्केशवसोमयाजिनः विप्रवर्यस्य धर्मपत्न्यां श्रीमतां श्रीशैलपूर्णानां सहोदर्यां ''श्रीभूदेवी'' इत्येव समाख्यातायां कान्तिमत्यां रामानुजः आविरासीत्।

**''पुण्याम्भोजविकासाय पापध्वान्तक्षयाय च।**
**श्रीमानाविरभूत् भूमौ रामानुजदिवाकरः''।।**

**नामधेयवैशिष्ट्यम्ः -** रामस्य अनुजः रामानुजः। त्रेतायां श्रीरामस्य अनुजः लक्ष्मणः। भरत, शत्रुघ्नौ यद्यपि भवतः, तथापि लक्ष्मिसम्पन्नः लक्ष्मणः। ''बाल्यात् प्रभृति सुस्निग्धः लक्ष्मणो लक्ष्मिवर्धनः ''इत्यार्षवाणी। एवं शेषावतारभूतः रामानुजः अपि भगवत्कैङ्कर्यरताः। ''यो नित्यं अच्युतपदाम्बुजयुग्मरुक्मः'' इति सौमित्रिरिव कलौ आचार्याः। वा रामः अनुजः यस्य सः रामानुजः। भगवदपेक्षया आचार्या एव श्रेष्ठाः। दुष्टनिग्रहत्वं भगवति दृश्यते, आचार्ये तु निग्रहशब्दार्थ एव नान्वेति। पुंसां मोहनरूपः श्रीरामः। तस्मादपि शिष्यकोटीन् मोहयति आचार्य स्वोपदेश, स्वाचरणमहिम्ना। अथवा रामा अनुजा यस्य सः रामानुजः। करुणया कमला इव, साक्षात्क्षामारूपिणी अर्थिनां कल्पवल्ली इति प्रथिता आमुक्तमाल्यदा गोदा रामानुजाचार्याणां स्वसृरूपा इति परमाचार्यानुभवः। बलभद्र इव एते शास्त्रायुधनिपुणाः शिष्यकारुण्यमूर्तिरूपा इति रामानुजत्वं सम्यक् संयुज्यते।

**रामानुजः - महिमा -** कलौ तावत् अधर्माचरणे रुचिः दृश्यते। एषा रुचिः प्रत्यहं एधमाना वरीवर्ति। सर्वे ब्रह्मवादिनः मनस्यन्यत् वचस्यन्यत् कर्मण्यन्यत् स्वभावः। वेदव्यासपादाः'' श्रुतिर्नष्टा प्रायेण पतिताःद्विजाः। अङ्गानि च विशीर्णानि। हा वृद्धो वर्धते कलिः इति कलेः प्रभावमवर्णयम्। कलौ युगे काश्चन महात्मा अवतरिष्यति इति श्रीरामानुजावतारसूचना प्रदत्ता। प्रपन्नजनकूटस्थाः निर्हेतुक भगवत्कटाक्षप्राप्तविशुद्धविज्ञानाः, श्रीमान् शठाराति दिव्य सूरि सार्वभौमाः। भविष्यत् काले श्रीरामानुजचरणावलंबनीनां आश्रितानां भक्तानां कलिरापि नश्यति, पश्यत, लोकाः'' इति आद्योषयन्। नात्र अतिशयोक्तिः, मोक्षस्तावत् परमप्राप्यभूतः। सच मुक्तिः श्रीरामानुजसम्बन्धादेव करे स्थिता इति, तिष्ठति स्थास्यति च। हस्तामलकवत् साङ्गशरणागत्यनुष्ठानेन सर्वेषां मुक्तिलाभः यथा तथा सुलभोपायप्रादर्शकः आचार्य श्रीरामनुजाः।

''आकर्षणानि निगमान्त सरस्वतीनां, उच्चाटनानि नहिरन्तरूपप्लवानाम्। पथ्यानि घोरभवसंज्वर पीडितानां हृद्यानि भान्ति यतिराजमुनेर्वचांसि।।'' इति रामानुजोपदेशस्य फलाधिक्यपरमम्परा कवितार्किकसिंहैः वर्णिता। व्याधिषु मध्ये ज्वरोपि अन्यतमः। सः ज्वरः कदाचित् मरणान्ताय भवति। तत्रापि अन्तः ज्वरः अतीव भयानकः। अन्तर्ज्वर सदृशः विषयसंशयः अज्ञानान्धकारे जनान् निमज्जयति। तत्त्वज्ञानेन

विना उन्नतिः कदा?। जननं मरणं तावदेव। समुद्धर्ता श्रीरामानुजः कथमुद्धरणं इति चेत् प्रथमतः मनसि शान्तेः स्थापनम्।

अशान्तस्य कुतः सुखम्'' इति गीतावाणी। धनार्जने मग्नाः वृद्धाः इति तु विडम्बना। कुतः तदानीन्तनवयसि सुस्थितपुत्र सत्वेपि धनाशा।। ''नायं लोकोस्ति न परः, न सुखं संशयात्मनः' धनसत्वेपि वार्धक्ये कथं भोगानुभवः। तत्त्वज्ञानोदयः कदा वाभोः?

**''तस्मै रामानुजार्याय नमः परमयोगिने।**
**यःश्रुतिस्मृतिसूत्राणां अन्तर्ण्वर मशीशमत्''।।**

श्रीरामानुजाश्रयणेन दुष्टशिखामणिः कलिपुरुषः नाशमेति। कर्मभारः अपगतो भवति। परमाचार्याः परितुष्टाश्च भवन्ति।

**श्रीरामानुज कृत लोकोपकारपरम्परा : -** एतेषां आचार्य सार्वभौमानां नाम्नैव प्रथते श्रीमद्विशिष्टाद्वैतं औपनिषिदं दर्शनम् श्रीमद्रामानुजदर्शनं इति। आचार्यैः सर्वतोमुखं साङ्गोपाङ्गं च इदं दर्शनं प्रवर्धितम्। नवद्वारे पुरेदेही इत्याह प्रथमाचार्यः। नवद्वारातः सुलभनिर्ग मनायैव नवग्रन्थाः रचिताः।

१. वेदान्तसारः २. श्रीभाष्यम् ३. वेदान्त दीपः ४. वेदार्थसङ्ग्रहः तथा ५. गीताभाष्यम् इति। शरणागतेः स्वरूपानुष्ठान तत्फलावाप्ति बोधकं गद्यत्रयम् ६. शरणागतिगद्यं ७. श्रीरङ्गगद्यं ८. वैकुण्ठगद्यं इव विभागः। चेतनानां शरणागत्यनुष्ठानसमये आचार्याः जनक इवि स्थित्वा चेतनान् भगवते समर्पयति। श्रीरामानुजः लीला विभूत्यां अवतारकाले वर्तमानान् अनेकान् चेतनान् श्रीरङ्गनाथस्य पादमूले रक्षणार्थं समर्पितवान्। उत्तरोत्तरकाले अपि सर्वे चेतनाः तत्पदतलमाश्रयितुं शरणागत्यनुष्ठान स्वरूपप्रतिपादकं शरणागतिगद्यं आश्चयत्। भगवत्स्वरूप प्रतिपादकं श्रीरङ्गगद्यं तथा फलनिरूपणात्मकं श्रीवेकुण्ठगद्यम्। कर्मानुष्ठानस्य आवश्यकता प्रतिपादनात्मकः नित्यग्रन्थ इति नवमो ग्रन्थः। सर्वत्र समन्वयः आवश्यकः। देहे इन्द्रियादिषु मध्ये यदि समन्वयः न स्यात् कार्यकरणे अशक्तः भवति। एवं ज्ञानग्रहणे संशयः यथा न भवति तथा ग्रहणमावश्यकम्। परमप्रमणभूत श्रुतिषु समन्वयः कार्यः। नो चेत् प्रमेयालाभेन च्युताः भवेम। प्रमाणेषु समन्वयः साधितः श्री भगवद्रामानुजाचार्यैः। शरणागतेः महिमा आवश्यकता च लोकाय उपादिशन्। अनेन सांसारिकादुखानां उपशमः, निरतिशयसुखप्राप्तिः च भवतः।

**आनन्दः कः -** मनसि आह्लादकारणभूतः सः यदिस्थिरतया न भवति तर्हि को लाभः। आनन्दरूपिणं भगवन्तं लब्ध्वा आनन्दिनः भवेम। तदर्थं कर्मानुष्ठानमावश्यकं वृद्धावस्थायां अवस्थित माता पितृरक्षणं दूरतः त्यक्त्वा को वा आनन्दः आनुभूयते इदानीन्तनैः। कुर्वन्नेवेह कर्माणि जिजीविषेत्'' इत्याह श्रुतिः। माता पितृसहस्रेभ्योपि वत्सलतरा श्रुतिः श्रेयोमार्ग एव बोधयति। धर्मार्थकाममोक्षेषु मध्ये केवलैकार्यपराः भवेम, तर्हि अन्येषां पुरुषार्थानां का गतिः? कथं वा शान्तिः यो न ददाति न भुङ्क्ते इत्याह कविः। श्रीरामानुजावतरणस्य चोतनोद्धार एव प्रमुखः उद्देशः। अत एव यावज्जीवकर्मकर्तव्यताप्रकारः नित्यग्रन्थे उपादिशन्। भगवदर्पणबुध्या कर्म कार्यं फलाशां विहाय। यतो हि फलस्वरूपज्ञानविहीनाः वयं कीदृशं फलं प्रषृव्यं इत्यपि न जानीमः। अतः सर्वं भारं भगवतः उपरि संस्थाप्य निर्भराः निर्भया भवेम इति उपादिशन्।

भूतपुर्यां अवतीर्णः रामानुजः प्रथमतः श्रीयादवप्रकाशसमीपे अधीतवान् । पश्चात् काञ्चयां वासः। श्रीवरदराजस्वामिनां अनुग्रहात् षडर्थग्रहणम्। श्रीमघामुनमुनि सन्दर्शनाय श्रीरङ्गनगरप्रवेशः। तदलाभेन, तस्याज्ञापरिपालनाय आचार्येच्छापूरणाय च प्रतिज्ञास्वीकारः श्रीकावेरीमध्ये। चोलराज्ञभिया महीशूरपुरी गमनं, मध्ये मेलुकोटे इति प्रथित दिव्यक्षेत्र समीपे वासः। सहस्राधिकजिनमत अनुयायिनां अभिप्रायखण्डनम्। श्रीवैष्णवमते तेषां रुच्युत्पादनम्। राज्ञः ''विष्णुवर्धन'' इति नामन्तर करणम्। मा तिरुनारायणपुरे उत्सवमूर्तेः सम्पत्कुमारस्य प्रतिष्ठापनम्।

पुनरपि श्रीरङ्गं प्रत्यागमनम्। बोधायन पूर्वाचार्यनुगृहीत श्रीसूक्त्यनुसारेण ''श्रीभाष्यादि'' नवग्रन्थ निर्माणम्। देवालयस्य अभिवृद्धौ यत्नः। उत्सवादि नैवेद्यपर्यन्तं यथाविघ्नं अन्यूनं च कर्मकरायितृत्वं। एतादशकर्मभिः परितुष्टः भगवान् श्रीरङ्गनाथः श्रीवैकुण्ठनगरागमने आदिष्टवान्। तदानीं विंशत्युत्तरैकशतसंवत्सराः अवतीर्णस्य श्रीरामानुजस्यासीत्। तस्मिन्नवसरे मत्सम्बन्धिसम्बन्धिनः अपि मन्नामबलादेव श्रीवैकुण्ठं प्राप्नुयुः तथा अनुगृहीतव्यः इति प्रार्थना आचार्यैः कृता आसीत्। शिष्य तत्सम्बन्धिष्वपि आचार्य कृपाप्रवाहप्रसरणेन प्रसन्नः भगवान् तथैव अनुगृह्णात्।



# हरिदासवाङ्मये श्रीवेङ्कटाचलाधीशः

तेलुगु मूलम् - सुस्वरं नागराजाचार्यः

संस्कृतानुवादः-
डा.गङ्गिशेट्टि लक्ष्मीनारायणः
चरवाणी - ९४९४२४८३४८



**भक्तिप्राशस्त्यम् -**

**नाहं वेदैर्न ..... परन्तप॥**

**(भगवद्गीता - २२-५३.५४)**

भगवतः अनुग्रहार्थम्, मोक्षसाधनार्थं न केवलं वेदाध्ययनम्, तपः, यज्ञाः दानकार्याणि उपयोगाय भवन्ति। एतैः सह अनन्या भक्तिः भवति चेत् एव मोक्षसिद्धिः भवति। एतादृशम् अभिप्रायम् एव भागवते प्रह्लादोऽपि प्रसङ्गवशात् अकथयत्।

**मन्ये .... यूथपाया॥ (श्रीमद्भागवतम्)**

आन्ध्रभाषायां सुप्रसिद्धः भक्तकविः पोतनामात्यः अपि एतादृशम् अभिप्रायं प्रकटीकृतवान्।

**तपमुन् .... संयुक्तुडै (पोतन भागवतम् - ७-३५०)**

एतादृशं भावमेव हरिदासश्रेष्ठाः श्रीविजयदासवर्याः एवं स्पष्टीकृतवन्तः।

**दान ....भक्तनिगनुदिन॥**

एतत् व्यासस्साहित्यम् अनुश्रुत्य भगवतः साक्षात्कारः भगवतः अनुग्रहेणैव सिध्यते, न तु दानस्नानमौनगानयज्ञहोमतपोभिः। **''सकलसाधन केल्ल सिद्धिगोळिसुदु भक्तिसाधन वल्ल दन्यसाधन उंटे''** सर्वसिध्दिसाधनं भक्त्यपेक्षया अन्यत् भवति वा इति पुरन्दरदासाः कथयन्ति।

**भक्तिनिर्वचनम्** - भक्तिम् उद्दिश्य जगद्गुरवः श्रीमन्तः मध्वाचार्याः एवं प्रकारेण उक्तवन्तः।

**माहात्म्य .... मुक्तिर्नचान्यथा॥**

माहात्म्यज्ञानदृढविषयेभ्यः प्रेमभावः अधिकः भवति। प्रेमभावनया भगवतः उपासना भक्तिः भवति। अनया भक्त्या एव मोक्षसिद्धिः भवति। प्राणसङ्कटसमये अपि इयं भक्तिः न त्याज्या। इयमेव सुदृढभक्तिः इत्युच्यते। परिवार-भोगैश्वर्यविषयेभ्यः भगवान् एव अधिकः इति भावः एव सर्वतोऽधिकः इत्युच्यते। एतत् भक्तिनिर्वचनम् एव मनसि निधाय वैपुल्येन श्रीमन्तः जयतीर्थाः **''परमेश्वर....निरन्तरप्रेमप्रवाहः''** इति अकथयन्। भक्त्या एव श्रीहरेः अनुग्रहः साध्यः भवति।

**भक्त्यर्थानखिलान्येव.... नित्यानन्दस्वरूपिणी॥**

भक्त्यर्थमेव समस्तकार्याणि भवन्ति। भक्त्या एव मोक्षः प्राप्यते। मुक्तसङ्घेभ्यः भक्तिः एव नित्यानन्दस्वरूपिणी भवति। अतः एव **''ज्ञानपूर्वः परः स्नेहो नित्यो भक्तिरितीर्यते''** इत्युक्तम्। सर्वविषयेभ्यः अधिकः सुदृढस्नेहः एव भक्तिः इति जगद्गुरूणाम् अभिप्रायः। भक्त्या एव श्रीमहाविष्णुः प्रसन्नो भवति न तु अन्येन केनापि। भगवति श्रीहरौ भक्तिः एव प्रधानः मोक्षमार्गः भवति।

**भक्त्यैवतुष्टिमभ्येति .... कारणम्॥**

इयं भक्तिः पवित्ररूपिणी स्यात्।'' मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनम्'' मनसा वाचा कर्मणा इत्युक्तौ भक्तः त्रिकरणशुद्धः भवेत्। आचार्याणां भक्तिनिर्वचनानुसारेणैव हरिदासाः पवित्रभक्तिं विपुलतया त्रिषु चरणेषु भक्तेन पालनीयानि विधिविधानानि एवं प्रकारेण अकथयन्।

**भक्ति .... समदृष्टिगुडबेकु॥**

भक्तेः त्रयः गुणाः आवश्यकाः भवन्ति इति विवेकिभिः ज्ञातव्यम्। मुक्तिस्वभावं ज्ञात्वा विरक्ताः भूत्वा जीवनं यापयेयुः। प्रेमा, प्रीतिः, रतिः इति अंशत्रयम् श्रद्धया निर्दोषतया भगवतः श्रीहरेः पादपद्मयोः स्थापनीयम्। **''जिह्वा मे मधुमत्तमा, वाङ्मयं तप उच्यते, प्रियं ब्रूयात्''** इत्यादि प्रमाणवचनानुसारं प्रियवचनैः अन्याय् सन्तुष्टान् कृत्वा अमृतं पिबेत्। शरीरे विद्यमानं प्रत्येकं रोमं परिशुध्या संस्थाप्य शमदमान् परिपाल्य क्षमागुणं सम्प्राप्य शतृमित्रयोः, निन्दास्तुतौ, मानावमानयोः, शीतोष्णसुखदुःखयोः, निन्दास्तुतौ लोष्ठकाञ्चनयोः समदृष्टिः भवेत्।

**नित्यानित्य .... सुखतोडबेकु॥**

नित्यानित्यवस्तूनि कानि इति विवेकेन ज्ञात्वा जागरूकतया प्रवर्तयेत्। सर्वदा इहपरगतौ इन्दिरानाथः एव इति मूलसूत्रम् सङ्गृह्य जीवेत्। ''सत्यं ब्रूयात् सत्यं प्रियहितं च यत्'' इत्युक्तरीत्या मनः, बुद्धिं सद्वस्तुनि केन्द्रीकृत्य सत्यमार्गे सञ्चरेत्। उत्तमोत्तमवस्तु श्रीहरिः इति सम्भाव्य हृदयकमले श्रीहरिं संस्थापयेत्। एतादृशीं भक्तिभावनां सम्पाद्य वैराग्यभावनया भक्तौ सुखं प्राप्नुयात्।

**सोह्यसोन्नियसूत्रव .... स्थिरविरबेकु॥**

द्वैतभावनां सम्यक् ज्ञात्वा हृदयकमले श्रीहरेः ध्यानं च ज्ञात्वा मायापरवशो न भूत्वा, न्यायनीतिमार्गं न त्यक्त्वा सदा हरौ वायो गुरौ च भक्त्या भवेत्। अयं च श्रेयस्करः भवति।






# अन्नमाचार्यचरित्रम्

तेलुगु मूलम् - डा.मन्नूरु शिवप्रवीण्
संस्कृतानुवादः- एम्.नागमाधुरी कामेश्वरी

हे वेङ्कटाचलाधीश! अलमेलुमङ्गयासह तव प्रियभक्तजनबृन्दैस्सह श्रूयताम्। निर्भयमन्नमाचार्यवर्याणां चरित्रं श्रावयाम्यहम्। श्रेष्ठाः श्रीहरिभक्ताः आकर्णयन्तु।

भूलोकवैकुण्ठमिव भासमानागिरिः तिरुमला। तेषु परमपावनेषु पर्वतेषु व्याप्तं श्रीवेङ्कटाचलाधीशं स्वपदकविताभिः अर्चितः अन्नमाचार्यः धन्यः। गानलोलाय श्रीहरये ३२,००० संङ्कीर्तनानि समर्प्य स्वयं धन्यो भूत्वा तेलुगुजातिमपि पुनीतवान्। तस्य रचना न सभाप्रशंसाप्राप्तये न हि गोष्ठिषु प्रशंसासम्पादनाय अथवा न सन्मानाय अपि तु केवलं श्रीहरिपरमपदप्राप्तये एव। तदर्थमेव अन्नमाचार्यः चिरञ्जीवित्वं प्राप्य चिरस्मरणीयो जातः।

द्वात्रिंशत्सहस्रसङ्कीर्तनैः श्रीहरेः लीलाः अन्नमाचार्येण कीर्तिताः। तदर्थमेव तेलुगुसाहित्यप्रपञ्चेऽस्मिन् पदकवितापितामहः इव विख्यातः बहुभिः पदकविताभिः श्रीहरिं स्तुतवान्। स्वामिनः लीलाः दशावतारघट्टाः रामायणभारत भागवतपुराणानि स्वपदकविताभिः कीर्तितवान्। बहूनां पुण्यक्षेत्राणां सन्दर्शनं कृत्वा तीर्थान् संसेव्य, तिरुपति गोविन्दराजस्वामिनः कडप वेङ्कटेश्वरस्वामिनः, ओण्टिमिट्टा कोदण्डरामस्वामिनः प्रोद्दुटूरु चेन्नकेशवस्वामिनः श्रीरङ्गं रङ्गनाथस्वामिनः केयिलकुण्टल पाण्डुरङ्गस्वामिनः, अहोबिल नरसिंहस्वामिनः मार्कापुरं चेन्नकेशवस्वामिनः वायल्पाडु पट्टाभिरामस्वामिनः कसापुरम् आञ्जनेयस्वामिनः अर्चावतारमूर्तयः संदर्श्य दर्शितेषु क्षेत्रेषु सः निरन्तरं पूज्यमानं श्रीवेङ्कटेश्वरं मनसि निधाय, तेन दर्शिताः मूर्तयः श्रीनिवासस्य प्रतिरूपाः इति भावयन्, सङ्कीर्तयन् श्रीवेङ्कटेश्वरभक्तेः प्रचारं कुर्वन् आन्ध्रप्रदेशं पूर्णतया सञ्चरितवान्।

श्रीवेङ्कटेश्वराय क्रियमाणेषु विविध कैङ्कर्येषु यथा नित्यकल्याणोत्सव, सुप्रभात, एकान्त, वसन्तोत्सवेषु यथा सन्दर्भं पदरचनां कृत्वा कृतकृत्यः सञ्जातः।

अन्नमाचार्यः क्री.श. १४०८ वर्षे वैशाखमासस्य पौर्णमी तिथौ कडपजिल्लायां राजम्पेटमण्डलान्तर्गते "ताल्लपाक" इति कुग्रामे लक्कमाम्बानारायणसूरिः इत्यनयोः पुण्यदम्पत्योः उत्पन्नः। अन्नमाचार्यः श्रीहरेः नन्दकस्यांशः। एकस्मिन् दिने अटवीं गत्वा तत्र वेङ्कटेशभक्तान् दृष्ट्वाताननुसृत्या तिरुमलां गत्वा श्रीवेङ्कटेश्वरस्य दर्शनं कृत्वा तस्य षोडशि वयसि एव श्रीवेङ्कटेश्वरनाम सङ्कीर्तनायज्ञमारब्धवान्।



सालुवनरसिंहरायाणां आह्वानेन पेनुगोण्डां गत्वा तत्र किञ्चित्कालं राजाश्रये स्थित्वा ''पदकविः'' इव जगत्प्रसिध्दः सञ्जातः। सालुवनरसिंहानां गुणगानकीर्तनं करणीयमिति आज्ञां तिरस्कृतवान् इत्यतः बन्धितः पुनः विमुक्तः अन्नमाचार्य विरक्तो भूत्वा तिरुमलापुशधीशस्य सेवायां शेषजीवितं यापयित्वा पदकवीनां मार्गदर्शकः सञ्जातः। इदम् अन्नमाचार्यवर्याणां संक्षिप्तचरित्रम्।

अन्नमाचार्यवर्याणां पदार्चनं तेनैव न समाप्तम्। तेषां वंशमेकं साहितीवनम्। तस्मिन् साहितीवने विकसितं प्रत्येकमपि पुष्पं स्वामिनः दिव्यपादपद्माङ्कितमेव। अन्नमाचार्यः पदकवितापितामहश्चेत् तेषां पत्नी ताल्लपाक तिम्मक्का तेलुगुभाषायां प्रथमकवयित्री। तदेकं विशिष्टं कुटुम्बम्। तस्यानन्तरं तस्य वंशस्थाः तेषां साहित्येन अलमेलुमङ्गापतेः अर्चनं यथाकृतं तथा नान्यत्र कुत्रापि दृग्गेचरो भवति। तिरुमलनाथगुणगान सङ्कीर्तनमेव उच्छवासनिश्वासाः इव जीवनं यापितवतां ताल्लपाक अन्नमाचार्याणां वंशविषये अवश्यमेव ज्ञातव्यम्।

## अन्नमाचार्यवर्याणां वंशः -

अन्नमाचार्यः नन्दवरान्वयः इति ताल्लपाक चिन्नन्ना स्वरचनायाम् ''अन्नमार्यचरित्र (तेलुगु) इति द्विपदकाव्ये उल्लिखितवान्। अन्नमाचार्यः नन्दवरीक ब्राह्मणकुटुम्बीकः। अन्नमाचार्यस्य वंशः नन्दवरीक वंशः। नन्दवराग्रहारस्थाः नन्दवरीकाः। वंशस्यऽस्य ऐतिहयमपि वर्तते। क्री.श. दशमशताब्दौ अद्यतन कर्नूल जिल्लायाः'' नन्दवरम् इति ग्राम नन्दः इति कश्चन परिपालयति स्म। एषः पाण्डववंशस्थः इति प्रतीतिः। प्रतिदिनम् उषःकाले काशीं गत्वा गङ्गास्नानं कृत्वागन्तव्यमिति इच्छा आसीत् नन्दस्य दत्तात्रेयः इति सिद्धस्य मन्त्रशक्त्या प्रतिदिनं काशीं गत्वा गङ्गास्नानं कृत्वा सूर्योदयात्पूर्वमेव गृहमागच्छति स्म। एकस्मिन् दिने नन्दस्य पत्नी एतत्सर्वमवलोक्य काशीं प्रति आगच्छमीति उक्त्वा, गत्वा गङ्गास्नानमाचार्य पुनरागमनवेलायाम् ऋतुस्नानवशात् तेषां मन्त्रशक्तिः कार्यं न कृतम्। तदा नन्दः काश्यां विद्यामानान् वेदपण्डितान् आश्रितवान्। ते ब्रह्माणाः तेषां तपः शक्त्या तौ गृहं प्रापितवन्तः। तदर्थं यत् साहाय्यं आवश्यकं तं साहाय्यं अवश्यं करोमीति नन्दः गङ्गदेव्याः प्रतिरूपत्वेन भासमानायाः चामुण्डेश्वर्याः साक्ष्या प्रतिज्ञां कृतवान्। किञ्चित्कालानन्तरं काश्यां क्षामवशात् ब्राह्मणाः नन्दवरमागत्य साहाय्यार्थं नन्दम् अर्थयामास। तदा प्रतिज्ञां विस्मृत्य ''साहाय्यं करोमि'' इति मया कदा उक्तम्? इति प्रमाणं दर्शयतु! इति पृष्टवान्। अशक्ताः काशी पण्डिताः चामुण्डेश्वरीं प्रार्थितवन्तः। भक्तानामार्तिं श्रुत्वा पण्डितैस्सह देवी आगत्य यथार्थम् अदर्शयत। अपराधं ज्ञात्वा नन्दवरं तेभ्यः अग्रहारत्वेन दत्वा प्रमाणरूपेण आगतां चामुण्डेश्वरीं तत्रैव स्थातुं नन्दः प्रार्थितवान्। सा माता एव अद्य साक्षीमाता चौडोश्वरी इव नन्दवरे विद्यते। एतत्सर्वं गोनिपल्लि रामप्पकविप्रणीते ''चौडेश्वरी माहात्म्ये'' उल्लिखितमस्ति। तदर्थं नन्दवराग्रहारस्थाः ब्राह्मणाः नन्दवरीकाः सञ्जाताः। तस्य नन्दरीकवंशस्थाः एव ताल्लपाक वंशस्थाः। नन्दवराग्रहारतः कडपजिल्लायां राजम्पेटमण्डले ताल्लपाकां प्रति आगमनकारणात् ताल्लपाकायां अन्नमाचार्यवंशस्थानां स्थिरनिवासत्वात् एतेषां वंशस्य नाम ''ताल्लपाक'' इति। एतेषां गोत्रः भारद्वाजसगोत्रः। अश्वलायनसूत्रः।

## अन्नमाचार्यवर्याणां पूर्वजाः -

नन्दवरा ........................तड्रियय्ये। (तेलुगु श्लोकः)

नन्दवरान्वये उत्पन्नः नारायणः वेदपरायणः। विष्णुभक्तः। तस्य पुत्रः विठ्ठलः। विठ्ठलस्य पुत्रः नारायणः। पुनः नारायणस्य पुत्रः विठ्ठलः। विठ्ठलस्य लोकैकसुतः नारायणः कुमारः। तस्य नारायणस्य नारायणसूरिः इति कुमारः। नारायणसूरेः पुत्रः एव अन्नमाचार्यः।

अन्नमाचार्यः श्रीहरिवरप्रसादेन पण्डितरत्नान् पुत्रान् प्राप्तवान्। तेषु अन्नमाचार्यस्य ज्येष्ठभार्यायाः तिरुमलम्मायाः पुत्रः नरसयाचार्यः कनिष्ठभार्यायाः अक्कलम्मायाः पुत्रः तिरुमलाचार्यः।





श्रीविश्वरूप इति ध्यानम्।




# स्वाध्यायमहिमा

- डॉ. दे.दयानाथः
चरवाणी - ९४१९२९५८४१

मनुष्याः विद्यया एव महत्त्वं प्राप्नुवन्ति। विद्या परं दैवतमिति विद्यायाः उत्कृष्टत्वम्, अपिच विद्याविहीनः पशुरिति विद्याहीनस्य मनुष्यस्य क्षुद्रत्वं च प्रपञ्चितं पूर्वैराचार्यैः। मनुष्याणां रूपयौवनसम्पन्नेऽपि महत्कुलेषु लब्धजन्मानोऽपि विद्यायाः अभावे ते निर्गन्धपुष्पसदृशा एव इति प्रोक्तम्। विद्यारूपः स्वाध्यायः एव परमोत्कृष्टः इति वेदेषु प्रतिपादितम्। दशोपनिषत्सु अन्यतमा यजुर्वेदीया तैत्तिरीयोपनिषिद् वर्तते। उपनिषदियं ब्रह्मतत्त्वप्रतिपादनाय विख्याता। अत्र त्रयाणाम् ऋषीणां संवादमाध्यमेन स्वाध्यामहिमा वर्णिता। यथा -

सत्यवचा, तपोनित्यः, नाकः चेति त्रयः ऋषयः आसन्। ते परस्परं संवदन्तः किं नाम उत्कृष्टं तपः इति विषये चर्चामकुर्वन्। तत्र प्रथमं रथीतरनामकस्य मुनेः पुत्रः सत्यवचा इति ऋषिः अवदत् सर्वदा सत्यकथनमेव उत्तमं तपः इति। द्वितीयं पुरुशिष्टिरिति नामकस्य पुत्रः तपोनित्यः इति ऋषिः अनशनधनदानरूपं कर्म एव उत्तमं तपः इति अकथयत्। तृतीयं मुद्गलनामकमुनेः पुत्रः यस्य नाम नाकः इति सः निर्णयरूपेण अवदत् स्वाध्यायप्रवचनरूपं कर्म एव मुख्यम् उत्तमं च तपः इति। स च सन्दर्भः तैत्तिरीयोपनिषदि इत्थं विद्यते -

**सत्यमिति सत्यवचा राथीतरः।**
**तप इति तपो नित्यः पौरिशिष्टिः।**
**स्वाध्याय-प्रवचने एवेति नाको मौद्गल्यः।**
**तद्धि तपः स्तद्धि तपः। इति। (तै.उप.१.९)**

अपिच स्वाध्यायः एव उत्तमतपः इत्यत्र श्रुतिरेव प्रामाणम्। यतः वेदे एव कथितमस्ति -

**तपो हि स्वाध्यायः (तै.आ.१.२) इति।**

यः स्वाध्यायरूपां विद्यामभ्यस्ति स स्वर्गादिफलमपि प्राप्नोति। तदुक्तम् - **यावतं ह वा इमां वित्तस्य पूर्णां ददत् स्वर्गं लोकं जयति तावन्तं लोकं जयति भूयांसं चाक्षय्यं चापपुनर्मृत्युं जयति ब्रह्मणः सायुज्यं गच्छति।।** (तै.आ.२.१४) इति। अतः मनुष्याः सर्वदा स्वाध्यायरूपं कर्म समाचरेत्। यतः स्वाध्यायं विना न किमपि साधितुं शक्यते। स्वाध्यायेण मनः एकाग्रं भवति, अपिच तद्वारा भगवद्भक्तिः ततः परांगतिश्च भवति। अद्यतने युवानः बहवः स्वाध्यायात् विमुखाः सन्ति। ते सर्वे युवानः स्वाध्यायमहत्त्वं जानीयुः। स्वाध्यायो नाम वस्तुतः पुराकाले वेदाध्ययनमेव। परमधुनातनकाले युवानः यं शास्त्रं पठन्ति अभ्यस्यन्ति तदपि स्वाध्यायशब्देन व्यवह्रियते। छात्राः अद्यतने विद्यालयादिषु यां विद्यां पठन्ति तत्र ते दत्तचित्ताः अवश्यं भवेयुः। शास्त्रं किमपि वा भवतु एकाग्रमनसा अभ्यासेन स्वविषये सर्वे निष्णाताः भवितुं शक्नुवन्ति। समयगभ्यस्ता विद्या अवश्यमेव फलं ददाति। तदेव उक्तं स्मृतिग्रन्थे -

**आम्रे फलार्थे निर्मिते छायागन्धौ अनूत्पद्येते,**
**एवं धर्मं चर्यमाणम् अर्थाः अनूत्पद्यन्ते।।**

अतः सर्वे स्वाध्यायशीलाः सन्तः **तत्कुरुष्व मदर्पणम्** इति भगवद्गीतावचनानुसारेण श्रीकृष्णर्पणबुद्ध्या स्वधर्ममाचरन्तः अवश्यमेव भगवतः श्रीदेवदेवस्य श्रियः पतेः श्रीनिवासस्य कृपायुक्ताः भवन्तीति विश्वासः।



## भक्तसेवायाम्



फिब्रवरि १४, २०२० भृगुवासरः तिरुमल क्षेत्रे नवीनीकृत अश्विनी वैद्यालयस्य प्रारंभोत्सव कार्यक्रमे ति.ति.दे. पालकमण्डलेः अध्यक्षाः श्री वै.वि.सुब्बारेड्डि महोदयाः भागं गृहीत्वा पूजाः अकुर्वन् ।अनन्तरं ते पत्रिकाप्रमुखैः भाषमाणाः तिरुमलक्षेत्रमागच्छतां भक्तानां, स्थानिकानां सौकर्यार्थं अपोलो, टाटाट्रस्ट् संस्थाभ्यां सहकारेण अश्विनी वैद्यालयस्य अभिवृद्धेः चर्याः स्वीकृता इत्यवदन्। अद्य प्रभुति अपोलो टाटा ट्रस्ट् संस्थाभ्यां सहकारेण तिरुमल अश्विनी वैद्यालये एव अधुनातन वैद्यसेवाः प्रदास्यन्ते सर्वे सद्विनियोगं कुर्वन्तु इत्यवोचन्।

फिब्रवरि १७, २०२० इन्दुवासरः श्रीशैलक्षेत्रस्य भ्रमरांबा समेत मल्लिकार्जुन स्वामिनः ति.ति.दे. पालकमंडलेः अध्यक्षः श्री वै.वि.सुब्बारेड्डि, कार्यनिर्वहणाधिकारी श्री. अनिल् कुमार् सिंघाल् महोदयौ ति.ति.देवस्थानस्य प्रतिनिधित्वेन पीताम्बराणि समर्पितवन्तौ। तयोः आलय कार्यनिर्वहणाधिकारी श्री के.एस्.रामाराव्, अर्चकाश्च स्वागतं व्याहरन्।





फिब्रवरि २३, २०२० भानुवासरः चित्तूरुजिल्ला श्रीकालहस्तिक्षेत्रे प्रचलित महाशिवरात्रि वार्षिक ब्रह्मोत्सवेषु अत्यंत प्रसिद्धे कल्याणोत्सव सन्दर्भे सोमस्कंदमूर्तिः, ज्ञानांबिकयोः ति.ति.देवस्थान प्रतिनिधित्वेन ति.ति.दे पालकमण्डलेः अध्यक्षः श्री वै.वि.सुब्बारेड्डि, कार्यनिर्वहणाधिकारी श्री अनिल् कुमार् सिंघाल् दंपत्यौ पीताम्बराणि समर्पितवन्तः।



Edited and Published on behalf of T.T.Devasthanams by Dr. K.Radharamana, M.A., M.Phil., Ph.D., Chief Editor, T.T.D., and Printed at T.T.D. Press by Sri. R.V. Vijay Kumar, B.A. B.Ed., Dy.E.O., (Publication & Press), T.T.D. Press, Tirupati - 517 507.

# तिरुमलतिरुपतिदेवस्थानम्

# तिरुपति

# श्रीगोविन्दराजस्वामिनः ब्रह्मोत्सवः

२०२० मे २८ तः जून् ०५ पर्यन्तम्



**२८.०५.२०२०,**
बृहस्पतिवासरः
प्रातः - ध्वजारोहणम्
रात्रौ - महाशेषवाहनम्

**२९.०५.२०२०**
भृगुवासरः
प्रातः - लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

**३०.०५.२०२०**
स्थिरवासरः
प्रातः - सिंहवाहनम्
रात्रौ - मौक्तिकमण्डपम्

**३१.०५.२०२०**
भानुवासरः
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

**०१.०६.२०२०**
इन्दुवासरः
प्रातः - आन्दोलिकासेवा
रात्रौ - गरुडवाहनम्

**०२.०६.२०२०**
भौम्यवासरः
प्रातः - हनुमद्वाहनम्
सायं - वसंतोत्सवम्
रात्रौ - गजवाहनम्

**०३.०६.२०२०**
सौम्यवासरः
प्रातः - सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

**०४.०६.२०२०**
बृहस्पतिवासरः
प्रातः - रथोत्सवः
रात्रौ - अश्ववाहनम्

**०५.०६.२०२०**
भृगुवासरः
प्रातः - चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्



SAPTHAGIRI(SANSKRIT) ILLUSTRATED MONTHLY
Published by Tirumala Tirupati Devasthanams Printing on 25-03-2020



अयोध्यायां श्रीरामस्य महावैभवेन पट्टाभिषेकः प्राचलत्। रामस्य राज्यपालन काले देशे प्रजाः ईतिबाधाः विना शांतेन सुखेन सन्तोषेण अजीवन्। रामस्य राज्ये धर्मः चतुष्पादैः आसीत्। रामस्य राज्यपालनं अनन्तर कालिकानां राज्ञां आदर्शाभूत्वा 'रामराज्यं' इतिनाम प्रतियुगं शाश्वतमभूत्।